स्वात्मानं बिम्बमेव चक्षुर्गृह्णातीति मतेऽभिघातकसंयोगस्य प्रतिबिम्बाविरोधित्वात्, यथा चक्षुरन्यदा स्वात्मानं मुखं वा न गृह्णाति, गृह्णाति तु प्रतिघात इत्यनुभवो दुरपह्नवः, तथा आकाशं प्रतिघाते गृह्णातीतिवच्च प्रतिघाते न ग्रहणम्, मनआदिभिरिन्द्रियैर्ग्रहणे प्रमाणाभावात् । किंचात्र प्रतिबिम्बग्राहकमन्तःकरणमविद्या वा वाच्या । न चैवं संभवति, उपाधेः प्रतिबिम्बग्राहकत्वस्य क्वचिदप्यदर्शनात् । नन्वहमज्ञ इत्येवमज्ञाने भासमानमात्मानमन्तःकरणवृत्त्युपारूढसाक्षी प्रतिबिम्बात्मानं गृह्णातीति ब्रूमः, दिङ्मोह इवाज्ञानेन प्रतिघातादन्तःकरणस्य फलतस्तदुपहितसाक्षिणो ग्राहकत्वाङ्गीकारात्, सोऽयं मानसः प्रतिबिम्ब इत्याशङ्क्याहुः किंच[५२] इति । अत्र पक्षिरूपत्वमुपासनाभिप्रायेणेति वहवः । 'मोदो दक्षिण' इत्यादिना प्रतिपराज्यरूपस्य ब्रह्माभेदादानन्दमयविज्ञानमयौ रामलक्ष्मणौ वा वृक्षं संसारमरणभावासमास्थितौ, तत्रानन्दमयः फलम्, नहि फलेन स्वतः किंचिद्भुज्यते, विज्ञानमयः पुनरानन्दमयतां प्राप्तुं तन्मात्राणि सुखान्युपभुनक्ति, अप्यन्तरे फलेनाविष्ट एको रमते, फलं तु स्वानन्दभुक्, छाया कान्तिरन्तरङ्गा, अत्रोभयभोक्तृत्वं श्रुतम्, तदविरोधेन साक्षिणोऽपि भोक्तृत्वं स्वभोक्तृत्वेन निर्वाह्यम् । गौणात्मव्यावर्तनाय सूत्रम् । तथा च साक्षी विज्ञानन्दनो न प्रतिबिम्बसमानाधिकरण, बिम्बत्वाद्बिम्बरूपमुखादिवदित्यर्थः । भवदभिमतप्रतिबिम्बपक्षे न संगच्छत इति । ननु न प्रतिबिम्बवैयधिकरण्यम्, बिम्बस्यैव प्रतिबिम्बत्वात्, प्रतिबिम्बात्मकरूपान्तरे तदुपाधिनिष्ठे मानाभावादिति चेत्, सत्यम्—यन्मते प्रतिबिम्बो न रूपान्तरं, तन्मतेऽपि बिम्बस्य विषयताद्वयमवश्यमङ्गीकार्यम्, अन्यथा बिम्बप्रतिबिम्बव्यवहारभेदानुपपत्तेः, तत्रोपाधिव्यङ्ग्यविषयताद्वये एकस्या उपाधिसंनिहितदेशोऽवच्छेदकोऽपरस्यास्तूपाधिरिति व्यवस्थायामुपाधिदेशस्यासहृदस्यापि सामुख्यमेव सम्बन्धो वाच्यः, असम्बद्धस्यानवच्छेदकत्वात्, प्रत्यगात्मनश्च कथं नाम सांनिध्यम् । अस्मन्मते त्विष्टापत्तिः, 'रूपं रूपं प्रतिरूपो बभूवे'ति ब्रह्मणः सर्वानुविधायित्वलक्षणस्वरूपसम्बन्धाभ्युपगमात्, अत एवोक्तम्, पक्षे[५३] इति । अध्यासमन्तराकृत्य प्रतिबिम्बोपपादने तु वरमध्यासावच्छिन्नमेव स्वरूपं जीव इति प्रतिपत्तुम् । यदि वाऽध्यासस्य सर्वप्रपञ्चसाधारण्यादसाधारणजीवलक्षणोपपादनार्थं प्रतिबिम्बकल्पनेति मन्यते, तर्हि प्रपञ्चैकदेशाध्यासः सर्वाविद्याध्यासो वा तन्निर्वाहक इत्युभयथापि जीवव्यवहारोपपत्तिः, साध्यासप्रतिबिम्बकल्पने 'तत्त्वमस्या'दौ भागद्वयत्यागापत्तौ स्वरूपमुद्दिश्य स्वरूपाभेदोपदेशानुपपत्तिः, तत्र भवन्मते स्वरूपं प्रतिबिम्बोऽध्यासविशेषावच्छिन्नो वा । अस्मन्मते तु वास्तवविषयताविशेषावच्छिन्नत्वमान्तरविषयतामुद्दिश्य ब्रह्मविषयत्वाभेदप्रतिपादने सर्वज्ञतायां किंचिद्ज्ञत्वस्यापि प्रवेशाम्नानार्थस्याविवक्षितत्वादुद्देश्यस्वरूपानुपमर्देनोपदेशो युज्यते, भवन्मते न तथा । प्रतिबिम्बोऽसीत्येतावन्मात्रबोधनेनैवास्मन्मते कृतार्थत्वाच्च, भवता तु परध्वंसन इति विपरीतलक्षणां पुरस्कृत्यैव विवक्षिताभेदो निर्वाह्यः, भवन्मते स्वरूपबाधाभावे विशेष्यमात्रलाभस्य दुर्लभत्वादित्येतत्सर्वमभिसन्धायाहुः इति[५४] यदुक्तं तत्रेति । नन्वात्मनात्मकल्पनानां तत्सत्त्वान्तासत्त्वादेव न हानमित्यत्राहुः अलीकत्वं चेति । अनिर्वचनीयस्वरूपजीवपक्षत्यागापत्तौ प्रारब्धप्रवेशापत्तेरिति भावः । सिद्धान्ते त्वनिर्वचनीयतापि तथेति हृदयम् । अत एव प्रतिबिम्बस्याऽनिर्वचनीयतापक्षेऽपि प्रवृत्त्यनुपपत्तिमाहुः मिथ्येति[५५] । मिथ्याशब्दोऽनिर्वचनीयवचन इति पञ्चपादिका, स्वयं तु बोधानुसारादत्यन्तासत्साधारणमिथ्याशब्दार्थत्वेनोक्तम् । तथा चानिर्वचनीयपक्षेऽपि सदसद्विलक्षणदर्पणाद्यवच्छिन्नाविद्याया एव चन्द्रादिप्रतिबिम्बत्वपक्षे प्रतिबिम्बस्य सदसदनिर्वचनीयस्वरूपं मिथ्यात्वं, न तु मतान्तरवदुपनीतविषयता ।

तत्र सत्त्वे निवृत्त्ययोगात् असत्त्वे प्रतिभासानुपपत्तेः तदुभयविलक्षणम् । अनिष्टं, किं तर्हि व्यावर्तव्यम्, सत्त्वमसत्त्वं वा व्यावर्त्यताम्, उभयविषसदसत्त्वयोः सत्वे किमिति तद्विलक्षण्यम्, तत्तत्समयानुपाध्यवच्छेदेन तत्र तत्र सदसत्त्वयोः प्रतीतेर्वैलक्षण्यानिरूपणात् । न च विनिगमकाभावादुभयोः स्वीकारविरोधवारणायावच्छेदककल्पनापेक्षया वरमनिर्वचनीयकल्पनमिति वाच्यम् । संयोगतदभावयोर्व्यवहारदशायां स्वस्वरूपाभ्यां मिथोऽनिर्वचनीयत्वापत्तेः । यदि चैवं सत्त्वासत्त्वे नैयायिकादिमतान्तराभ्युपगते इति नाङ्गीक्रियेते, तर्हि धेयं मतान्तरासिद्धमप्येवं दूषणं भवद्भिः सूचितम् । आस्तां चानिर्वचनीयत्वं, तस्यापि प्रतीतिपक्षाणगतत्त्वे विचारणीये न वा, तस्याप्यनिर्वचनीयत्वेऽनवस्था, अनवस्थितमायाकल्पनापेक्षया स्वव्यवस्थितब्रह्माङ्गीकार एव ज्यायानिति

वक्ष्यामः । [५६]**धैर्यमैहिक्येन** इत्यादेरेवं भावः—यदि नाम ब्रह्मैवान्वेषणीयं, तर्ह्यहन्तादिप्रधाने संसारेऽहन्तादिकमेव कर्तृपर्यन्तानां निवर्तनीय-त्वसेसन्वेषणीयम्, इतरथा तन्निवर्तकपारलौकिकसाधनाचरणे भवद्रीत्या साधनानां त्वेनाविशेषादैहिकफलसाधारणप्रवृत्तावेवाहन्तादिकं प्रगितव्यम् । न च मानान्तरानधिगतश्रुत्युपदिष्टसाधनानामेवाहन्तादिनिश्चायकत्वं निवर्तकत्वं चेति साम्प्रतम्, लौकिकसाधनानामपि भगवदिच्छान्तःपातित्वेन श्रुत्युपदिष्टत्वात् । निश्चायकत्वादिकं तु चिन्त्यम्, भवन्मते विभूतीनां मायोत्कर्षप्रभावतः प्राधान्यम् । ब्रह्मतत्त्वं हि समर्थम् । लौकिकेऽपि चासत्त्वोत्कर्षः, स एवासौ, न माध्यमिककल्पना पतत्प्रकर्षदोषेण सत्त्वम्, तस्माद्दृढत्वमिह । तस्मात्पारमार्थिकसाधनानां ब्रह्मभावोत्कर्षात्तेन फलरूपब्रह्माविर्भावविषयतावैलक्षण्यस्यैश्वर्यादिमाधुर्यवत्प्र-शास्त्यानुमशक्यत्वान्मुमुक्षुस्वरूपमनाविर्भूतब्रह्मतया बद्धमिवास्मन्मतेऽप्याश्चर्यवदिति प्रमाणप्रतिपन्नानुमहाख्यविलक्षणतया स्वतन्त्रया नित्यमुक्तमेवाविर्भावसत्स्वरूपं फलतीति सिद्धान्ते व्यवस्थिते जीवस्वरूपं विद्याविशेषावच्छिन्नम्, प्रत्यात्मनानात्वापत्तेः, तस्य अनुगतत्वात्, अनुगतत्वादेर्विज्ञानात्मब्रह्मैकनिष्कर्षत्वात्, एकविज्ञानप्रतिज्ञानानुरोधादिति । यदा चाविद्योपरमस्तदा तूष्णीं शब्दाभाव इत्याहुः [५६]**तूष्णीमिति** । अन्ततः क्षणापि प्रतिक्षणपरिणामिनीह विद्या क्षणिकया उपरमे मध्ये जीवभावापगमप्रसङ्गः । नित्यविषयता तु ब्रह्मैव तावता शब्दोपदेशाद्युपाधिधर्मानुविधायित्वान्नातिप्रसङ्गः । **तूष्णीं** कर्णध्वनिरपि नोपलभ्येत । भूतावेशश्च, तावता तरातरा स्यात्, अत एवाहुः [५६]**चिह्निरित्यादि** । [५६]**कुतोऽपि** मलिनीकरणादेः । [५६]**सन्मार्गमार्ग** षड्दर्शनानि आत्मतत्त्वे, पुनरेके मन्यन्ते समं वेदान्तैः सप्तदर्शनानि, तत्रैकतया प्रच्याव्य वेदप्रामाण्यमनादिसाधारणं वेदान्तव्याख्याकरणे धार्ष्ट्यं योधानामिव तत्त्वसादिप्रभृतीनामुत्कृष्टवादिनामप्यवगणनम् । प्रामाण्यं हि पारमार्थिकतत्त्वाविदकत्वनिबन्धनं वेदत्वं नातिशेते । ये महावाक्यानामेव तथात्वं मन्यन्ते, तेषां सकलवेदसम्बन्धो महावाक्येषु प्रष्टव्यः, विरुद्धतात्पर्यकयोर्विरोधात्, सखण्डाखण्डयोरेकीभावस्यास्मत्सिद्धान्तात् । न ह्यनुष्ठानांशे प्रतियोग्यंशे वा तात्पर्यकल्पनापि मध्येऽवतरति, महातात्पर्यत्वेनैवास्माभिस्तेषामन्वयाङ्गीकारात्, परिशिष्ट-भावनायामिव परेषां पाक्षिकः पुनरन्वयो यथागतमुपपादनीय उपरिष्टात् । [५६]**तेन मध्यपातित्वेनेति** । इदं यद्यलौकिकमप्रकीर्तनं यल्लौकिकालौकिकप्रपञ्चयोर्मध्यपाती वेदः, एवमनुमितेन मद्व्यतिरेकेणैतत्प्रपञ्चयोरैक्यं विलसतु वाचोष्टमिदं गृहदयेष्विति तादृशं मध्यप्रपञ्चसागरे मर्यादारूपेण स्थित सेतुमिव त्वया वप्रक्रीडास्पदं नीतं, किमिति वेदं त्याजयन्ति शरवत्तत्राङ्कुशो महावाक्यं सप्रणवं मन्मासवेदार्थसंग्राहकं, न तु निर्विकल्प-कजनकं, वाक्यमात्रस्याखण्डार्थतायाः सम्प्रतिपत्तेः, अत्रापि तौल्यस्योपपादयितुं शक्यत्वात् सर्वसंग्रहरूपपदार्थविरोधिसर्ववेदवाक्यार्थावबोधाधीन एवैतत्समत्सिद्धान्त एव शरणम् । इतरथा शुक्तिमौक्तिककृतानामपि तत्कर्णाभरणापत्तेरित्याहुः [५६]**तेनैवाहीति** । तथाहि दर्पणाज्ञानं न प्रतिबिम्बस्वरूपकं, दर्पणस्य ज्ञातत्वात् । न च दर्पणावच्छेदेन मुखाज्ञानं तथा, मुखाज्ञानस्य शुक्तिकल्पकत्वे मानाभावात्, रजताज्ञानस्येव रजतादेः । तत्स्मारप्रतिबिम्बस्याज्ञानकल्पितत्वाभावे तदंशे भ्रमत्वं नैयायिकरीत्यापि न संभवति, तदभाववति तत्प्रकारेणोत्पत्तेरपि । परावृत्यग्रहणपक्षे दर्पणाद्यनुविधानानुपपत्तेः । तदनुविधानाननुविधायिनी भ्रमविषयतेति तु न साम्यम्, तेऽपि । यदि च वैज्ञानिकाधारमीवादावेव प्रकारत्वात्, दर्पण इत्यत्र वैज्ञानिकाधारतायाः सप्तम्यर्थत्वे बाधकाभावात् । आधारत्वोत्तरत्वं विषयताविशेषो वा प्रतिबिम्ब इत्युच्यते, तथापि तदभाववति तत्प्रकारत्वाभावान्न भ्रमत्वम् । आधारत्वोत्तरत्वं विषयताविशेषो वा प्रतिबिम्ब इत्युच्यते, तथापि तदभाववति तत्प्रकारत्वाभावान्न भ्रमत्वम् । विषयताभेदाभावाच्च रोऽवच्छेदे वा प्रागेऽपि सम्मुखमुखसाधारणविषयताभेदे मानाभावादज्ञानव्यक्तिभेदेन विषयताभेदाभावाच्च मानाभावादनुपपन्नम् । तस्मात् प्रतिबिम्बेच्छामप्यनादीच्छाया सान्निध्यस्य विषयताविशेषोऽयं भ्रमत्वाऽपि निरूप्य-मानाभावादनुपपन्नम् । तस्मात् प्रतिबिम्बेच्छामप्यनादीच्छाया सपरिकरस्यापि धर्म्यंशे प्रतिबिम्बस्य प्रमाविषयत्वाम् । तथा चाक्रूरदर्शनसंवादः साधीयान् दृश्यमानरूपस्य सपरिकरस्यापि धर्म्यंशे प्रतिबिम्बस्य प्रमाविषयत्वाम् । तथा चाक्रूरदर्शनसंवादः साधीयान् दृश्यमानरूपस्य विस्तरेण । [५६]**प्रतिबिम्बतत्त्वं जानन्निति** । लौकिकालौकिकत्वात्, तत्र तथैव स्वरूपेणावटेत्युक्तेविस्तरं विस्तरेण । न अनार्द्रा प्रवाहेऽपि दृष्टसाधारण्यनुमाने दृष्टान्तासाधारणविषयतामात्रं ज्ञानश्च निष्कम्पप्रवृत्तिमान् पूर्वं दृष्टः, न अनार्द्रा प्रवाहेऽपि दृष्टसाधारण्यनुमाने दृष्टान्तः, निष्कम्पा तु साधनालाभः । नन्वैहलौकिकप्रवृत्तौ दृष्टान्तः सकम्पप्रवृत्तिमानामफलादावपि तथाविधे दृष्टान्तः, निष्कम्पा तु साधनालाभः । तथा च वक्ष्यन्ति सम्मतीति । एतम्, आस्तिकानां निष्कम्पा प्रवृत्तिरपि न, नियमतः कृष्यादिप्रवृत्तिवदुपपत्तेश्च । तथा च वक्ष्यन्ति सम्मतीति । एतम्, आस्तिकानां निष्कम्पाऽपि न, नियमतः कृष्यादिप्रवृत्तिवदुपपत्तेश्च ।

प्रवृत्तिरिति यावदविवादम्, 'साङ्ग' इति न्यायात्, तथापि त्वन्नये प्रतिबिम्बस्य मिथ्यात्वज्ञाने प्रमोप कल्प्य मिव अनुमया जीवस्य प्रतिबिम्बत्वमुच्यते, न वेदे इत्यनुक्तोपालम्भ इति । किञ्च शब्दस्य मिथ्यात्व नार्थस्य, अन्यथा ब्रह्मणोऽपि मिथ्यात्वापत्तिरिति चेदात्मानमुपालभस्व ब्रह्मन्यायेनैवास्माभि कार्यकारणव्यवस्थाया सत्य त्वाभ्युपगमात्, सत्ये ब्रह्मणि समन्वयाभ्युपगमाच्च । नाप्यनुक्तोपालम्भ, 'अज्ञानदर्पणे स्फारे समस्ता वस्तुदृष्टय । इमास्ता प्रतिबिम्बन्ति सरसीव तटद्रुमा' इति योगवासिष्ठाभिप्रायेण भवन्मते सर्वेषा प्रतिबिम्बत्वाभिधानात्, प्रतिबिम्बत्वव्यापकमिथ्यात्वज्ञानस्यैव प्रवृत्तिविघटकत्वेन मूलोक्ततया व्यापकमुखेन प्रतिबिम्बत्वोक्तेरनुक्तोपालम्भत्वाभावाच्च । किञ्चत्यन्तेनात्मज्ञानज्ञानादिदूषणसमुच्चय, तथाप्यनास्थया पुरुषार्थेऽपि प्रवृत्ति सम्भवतीति यथात्म्यज्ञानेनास्माभिर्निवार्यते इत्याहु सैत्यमेवेति । ननु स्वप्नेऽपि स्वप्न पश्यामीति कदाचित्स्वप्नो जायत इति चेत्तत्राहु –स्वप्न एव विदुष इति । तादृशज्ञानवतोऽपि स्वप्ने प्रवृत्तिर्जायमाना स्वाप्निकफलाविसंवादिनी च । तथा चेय जायमाना क्रममुक्तिपर्यवसायिनी ब्रह्मभावपर्यवसायिनी वा न स्यात्, स्वाप्निकसंवादेनाप्युपपत्ते, 'असत्ये वर्त्मनि स्थित्वा तत सत्य प्रपद्यत' इति चेत्तर्हि यावत्सत्यप्रपत्तिपर्यन्त स्वप्न एव स्थित, स्वप्नतुल्यमेव फलमुपलभेत, मैवम्, उक्तरीत्या स्वाप्निकसम्वादेनाप्युपपत्ते । तथा च ब्रह्मभावोऽपि स्वप्न एवास्तु, का क्षतिर्मो च निवार्यताम्, तादृशनिवर्त्ये स्वप्नाङ्गीकारस्य महानिद्रावदुपपत्ते । तथा च मिथ्याब्रह्मभावनव शास्त्रार्थोऽस्तु, ब्रह्मणो मिथ्यात्वेऽप्यक्षते, स्वप्नफलन्यायेनोपपत्ते, क्षणिकब्रह्मवादवत् फलाविसम्वादस्यैवोपपादनीयत्वात्, मिथ्यापदार्थस्याधिष्ठानावरोप्यत्वेऽप्यधिष्ठानस्यापि स्वप्नफलन्यायेनोपपत्ते । अत्यन्तासत्यपक्षप्रवेशाद्वा नाधिष्ठानापेक्षा । एवमधिष्ठानधाराया अलीकत्वेनैव तत्कल्पनागौरवानयनादिति निगमकल्पवृक्षमूर्द्धानं गत प्रतिवादिनमवतारयन्ति गृहाणेति । प्रतिबिम्बितफल सत्य गृहाणेत्यर्थ । सोऽवतीर्य पुन शङ्कते नन्विति । ममाधीतवेदवेदान्तस्य शाब्दज्ञान जातमपि न फलायालमभूत्, व्यर्थश्च मया स्वाध्यायविधिश्रुत इत्यनुतापिन वादिन स्वसाधारणतामुपनयन्ति नैतत्सारमिति । यत्त्वया शास्त्रार्थतया बुद्ध प्राप्त च फलम्, तत्स्वप्नफलन्यायात्ति सारमन्त सार नेत्यर्थ । प्रतिबिम्बत्वेनेति । अनुमान तु न प्रतिबिम्बितवृक्षपक्षम्, आश्रयासिद्धे, किन्तु तीरवृत्तिवृक्षा नीरवृत्तित्वाभाववन्त, नीरावच्छेदेन चक्षुर्ग्राह्यत्वाभावात् तीरवृत्तिपाषाणादिवत् । नीरावच्छेदेन चक्षुर्ग्राह्यत्वे सतीति हेतौ विशेषणीयम्, अन्यथा नीरावच्छेदेन चक्षुर्ग्राह्यत्वाभाववति नीररसादावनैकान्तिकतापत्त । एव च नीरावच्छेदेन तत्फलार्थिप्रवृत्त्यभावोपपत्तिरित्याहु अन्यथेति । अन्यथा असत्त्वानुमानात्मकविशेषदर्शनस्य चाक्षुषभ्रमानिवर्तकत्वप्रवृत्त्यविरोधित्वे । एव च संसारितयाहुरित्यनेन पूर्व सूचित प्रकृत्यनुपपत्तिरूपदूषण दृढतया प्रकृते सङ्गमयन्ति प्रेप्सोरित्यादि । न ह्येवविधफलकत्वज्ञान प्रात्यक्षिक येन परोक्षबाधेऽप्यनुवर्तेत, किन्त्वेवविध प्रवर्तकज्ञानमपि मिथ्यात्वज्ञानेन बाध्यतैवेति भाव । लौकिकसन्निकर्षान्यदोषविशेषाजन्यज्ञाने तदभावव्याप्यवत्ताबुद्धेर्विरोधितया जलादिसमवधानात्मकदोषविशेषान्यप्रतिबिम्बभ्रमस्याविरोधित्वेऽपि निष्कम्पप्रवृत्ति प्रति बालकपक्ष्यादिप्रवृत्तिव्यतिरिक्तप्रवृत्ति प्रति च विरोधित्वमन्वयव्यतिरेकसिद्धम् । तत्कारणेष्टसाधनताज्ञानविघटकत्वाच्च सुतरा प्रवृत्तिविरोधित्वमित्यस्मदुक्तौ बाधकाभाव इत्याहु बाधकाभाव इति । स्यादेतत्, प्रवृत्तिसमये बाधज्ञाने प्रमाप कल्प्यते, प्रवृत्तिरूपफलानुरोधात् । किञ्च दृष्टज्ञाने विरोधित्व क्लृप्त, न तु प्रवृत्तौ । तत्कारणीभूतज्ञानप्रतिक्षेपकत्वे शाब्दान्यत्वमपि विशेषदर्शनप्रतिबध्यतावच्छेदके निवेश्यताम्, योग्यतानानहेतुतामतोऽपि विशेषदर्शनस्य दृष्टस्याप्यशक्यत्ववत्ताज्ञानीयपीतप्रवृत्तिप्रयोजकज्ञानविरोधितायां विपरीतज्ञानविरोधित्वमेवावच्छेदक वाच्यम् । तथा च शाब्दमिथ्यात्वज्ञानस्य विपरीतज्ञानविरोधित्व न कल्प्यते, फलानुरोधिकल्पनाया दृष्टत्वादित्याहु नन्विति । अधीनसाङ्गस्वाध्यायस्य पूर्वोत्तरावस्थाया स्वर्गसुखसाधन, भिप्यति इत्न मिथ्यात्वधर्माभावज्ञान यद्यपि प्रतियोगिसमानाधिकरणभावज्ञानत्वात् प्रतिबन्धक, तथापि मिथ्यात्वज्ञान सत्यत्वज्ञानप्रतिबन्धक भवत्येव, भवन्मते वस्त्वमिथ्यात्वज्ञाने सति सत्यत्वमति सत्यत्वप्रकारकयोग्यताज्ञानाभावाच्छाब्दबोधानुपपत्ति । यदि च प्रवर्तिकायां प्रमात्व नोपयुज्यते, व्यावहारिक वा तथा, तथापि किम् । मिथ्यात्वज्ञाना इतप्रवृत्तिनिवर्त्तनादिति चेत्, न, तत्राव्यवहारिकत्वेन प्रवर्तकत्वमविदाम

प्यतिरोधानात् । तत्र व्यावहारिकत्वं प्रकारो न चेत्तन्यदेतत् । कथं तर्हि वेदान्तेषु मिथ्यात्वव्यपदेशः, प्रतीतौ
विचारणीयायां कोऽयं पर्यनुयोगः । वस्तुतः सदंशसामानाधिकरण्यं विहाय प्रतीतिमात्राभावादसदंशसामानाधिक-
रण्यमतिक्रम्य च ब्रह्मणि सत्प्रतीतेर्बलवत्त्वमभ्युपगच्छतां ब्रह्मवादिनां मते सद्व्यपदेश एव बलवानिति सत्त्वेन
प्रतीयमानं मिथ्यात्वमपि सत्त्वं नातिशेते इत्यनुशयेनाशयाना आहुः तेव कुत इति । आदौ फलानुरोधितया
पूर्वपक्षे प्रवृत्तिरानीता । दृष्टार्थापत्तिदृष्टान्तेन मे स पूर्वपक्षी एवं प्रष्टव्य इत्यर्थः । पूर्वपक्षस्तु सिद्धान्तनिर्द्धारे
सर्वत्र मिथ्यासिद्धान्तानवतारेऽपि स एव सिद्धान्त इत्युभयथापि पूर्वपक्षो मिथ्या, अतस्तथा वदन्नपि सोपप-
त्तिकं वदतीति वादी तोषयितव्यो भीषयितव्यश्च । तुष्टं प्रत्युच्यते– यदि ब्रूयादिति । 'एष तु वा अतिवदति
यः सत्येनातिवदती'त्यतिवादित्वलिङ्गं ब्रह्मविदां वादिद्भिरदक्षीडाखेतुं द्रक्ष्यन्ति से वक्तव्य इति । प्रतिवादित्वं
तस्य प्रकटीकृत्य त्वया स वक्तव्य इत्यर्थः । निःश्वासो जगज्जीवनयोनित्वसमानाधिकरणः । अत्र संशयः,
ब्रह्मणे पूर्वं वेदोपदेशो वा, श्रीभागवतोपदेशो वा । आद्ये पुनरुपदेशवैयर्थ्यम् । द्वितीये आद्यवैयर्थ्यम्, तस्मादु-
भयोपदेश एकधोक्त इति निर्द्धारः । तयोरेकवाक्यतया शास्त्रार्थो ब्रह्मरूप एव शब्दसाधारण इत्याहुः वेदं
इति । स्वयम्भूरिति । वेदात्मकः शब्दो नित्यः, तदुत्पादकशब्दान्तराभावात्, अखण्डशक्तेरखण्डशब्दप्रमाण-
त्वात् पूर्वपूर्ववर्णगोचरसमूहालम्बनसंस्कारसहितान्तिमवर्णानुभवपक्षे पूर्ववर्णांशे लौकिकविषयतानुपपत्तेरिति
विस्तरः । पदज्ञानत्वेन कारणत्वात् शब्दस्येश्वरे जगत्कारणतायामवच्छेदकत्वात् । अत एव शब्दानुगतं सर्वं
लौकिकस्त्वाभासस्तस्यालौकिकशब्दत्वात्तस्यैवा( वेदत्वाच्च ) वच्छेदकत्वाच्च वेदत्वं पुनरखण्डोपाधिर्विषय-
ताविशेषो वा, लक्षणान्तराणां नवीनैः परिशोधे तत्रैव पर्यवसानात्, क्षोदक्षमत्वाच्च । भगवतः मुखोल्लास-
व्यापारेण नामात्मकः शब्दः स्वयमेव स्वरूपघटकतया प्रकटीभवति । नामविशिष्टो हि भगवान् शब्दार्थः, एवं
वेदविशिष्टोऽपि अग्निहोत्रादिनामविशिष्टाग्निहोत्रवत्, द्वादशेऽहनीति वेदे सर्वनाम्नां सिद्धत्वाच्च घटपदवत्त्वं
घटत्वमिति शाब्दिकैरभ्युपगमाच्च । सत्तावदेव शब्दोऽसत्तो व्यावृत्तः, स यदि पूर्वं न स्यात् तद्विशिष्टोऽर्थो भग-
वान्न स्यात्, तस्माद्वेदो भगवल्लक्षणमेव । न च तत्कारणत्वमेव शास्त्रयोनिसूत्रितम्, वेदविशिष्टस्यैव वेदं प्रति
कारणत्वात्कारणतायाः स्वसत्ताव्याप्यकार्यसत्ताकत्वे पर्यवसानात्, ज्ञानवद्वेदस्यापि नित्यत्वात् । अन्यथाऽनित्य-
दृष्टान्तेन नित्यज्ञानादेरसिद्ध्यापत्तेः । नन्वनित्यज्ञानस्योत्पत्तिर्न श्रुता, वेदस्य तु श्रुतेति वाच्यम् । 'स्वयम्भू'-
रिति वाक्येन नित्यत्वस्यापि श्रुतेः । एवं सति नित्यत्वे सत्ता ( लाघवा )नुगृहीता श्रुतिर्बलवती । तथा चाध्या-
पनादौ वेदानां प्रत्यक्षमेव, विषयतया वर्णत्वादेरवच्छेदकत्वाद् वायुसंयोगादेस्तत्रैव कारणत्वात्, अलौकिक-
प्रकारतावादिनां नैयायिकानां तादृशविषयताया अनुमित्यादसाधारण्यात् परम्परया वर्णत्वमेवावच्छेदकम्, अनि-
त्यत्वकल्पनापेक्षया महल्लाघवादित्यलं विस्तरेण । पूर्वपूर्ववर्णगोचरसमूहालम्बनसंस्कारसहितान्तिमवर्णानुभव-
पक्षे पूर्ववर्णांशे लौकिकविषयतानुपपत्तेरिति विस्तरः । अत्र 'शुश्रुम' इत्यनन्तरं 'सर्वे वेदा यत्पद'मित्यादिपाठ
उपलभ्यमानोऽपि क्षेपकदोषात्किञ्चिल्लेखि । अत्र कारणतायाः सावच्छिन्नत्वनियमे वेदादीन् प्रति ब्रह्मकारण-
तावच्छेदकनित्यत्वपक्षे वा ज्ञाप्यत्वं प्रत्यवच्छेदकमविद्या वा स्वरूपविषयता वा । निरवच्छिन्नकारणतापक्षे तु
कारणतावधित्वलक्षणा विषयतेत्युभयथापि स्वपरसाधारणवैशिष्ट्यसिद्धिर्ब्रह्मणीति स्वयमेव समाधावनुभूयापि
विचारयेत्याहुः स्वयमेवेति । जगत्कारणतावच्छेदकाविद्याया वेदजनकतावच्छेदकत्वे लौकिकवाक्याविशेषः,
तथा सति वेदोक्तपदार्था यूपादयोऽप्यदृष्टघटितस्वरूपा न स्युः, ब्रह्मापि व्यावहारिकं स्यात्, ततथाविद्यायामुत्क-
र्षापकर्षतारतम्यस्य ब्रह्माविर्भावतारतम्यनियम्यत्वात्ततारतम्यस्य 'आथर्वण'दिति न्यायेनानुमहात्मकृविलक्ष-
णक्षणात्मकविषयतासाध्यत्वात्तथैव विरोधं परिहृत्य ब्रह्मवादी विजयते । परैस्त्वविद्यामहिम्नैव विरोधमपह्-
नद्भिस्तदुपष्टम्भकतया च 'मायामाश्रित्य वदता'मिति वाक्यं दर्शयद्भिर्विवर्तमेदभिधे ब्रह्मणि विरोधो नाविद्-
यापि रोद्धुं शक्यः, स्वीयाघटितघटनापटीयस्त्वात्, तथा विवर्तस्य मायापरिणामरूपत्वानभ्युपगमात्,
अन्यथा स्वतन्त्रविवर्तवादानुपपत्तेः ब्रह्मनिष्ठविषयताविशेषमन्तरेण विवर्तस्यैव दुर्वचत्वाच्चेति विचारयन्तरं

१ सत्ता भवान्तरतदर्थकत्वे पाठान्तरम्

विभावनीयं पण्डितैः । एवं वेदानां ब्रह्म कारणमविद्या वेति विषये अपूर्वां वेदमीमांसां तस्मा उपदिश्य तच्छि-ष्यानुक्रोशेनाहुः [५०]किञ्चेति । प्रमाणशब्दत्वेन वेदानां प्रामाण्यमर्थतथात्वनियतमिति वेदवादानुसारिसर्वेशा-स्त्रेभ्यो ज्ञात्वा अस्ति मायावादोऽपि परम्पराप्राप्त इति सम्भावनयाऽर्थतथात्वे सन्दिहानस्तस्य प्रामाण्याप्रामाण्य-योरुदासीनतया तदुभयमनपेक्ष्य श्रवणमेव कर्तव्यमिति प्रायोपविष्टस्तामेव साक्षान्मायावादिनमुपलभ्य वेदप्रा-माण्यपरिनिष्ठितधिया पुनः संशयात्मतया वा न निष्कम्पं प्रवर्तेत तच्छ्रवणे तदर्थानुष्ठाने वेति सन्दर्भार्थः । सकम्पप्रवृत्तावपि वस्तुस्वाभाव्यात्फलं भविष्यतीत्याशङ्कते नंनु यत एवेति । उक्तरीत्या निर्णयसंशयौ व्याख्यातौ, स्वोक्तरीत्या तच्छिष्यायोपदिशन्ति तन्निर्णयार्थमिति । एतानि वाक्यानि पूर्वं वेदकारणताप्रा-माण्ये प्रस्तुतानि, इदानीं तु निर्णायकत्वेनोच्यन्त इत्यपौनरुक्त्यम् । यद्यपि श्रुतित्वेनैव परमते न निर्णायकत्वम्, विरुद्धवाक्ययोः प्रामाण्यस्य दुर्घटत्वात्, अत उपक्रमादीनां स्वरूपतो वेदोक्तानां लौकिकवैदिकोपपत्तिसिद्धानां प्रामाण्यमनुसृत्य यथामतं स्वस्वाचार्यद्वारा निर्धार्य च परमतीते सतीतयं शमनीया श्रवणप्रवरैः । किं वोभयसमाधे समाधिसौकर्यायैकविध एव शास्त्रार्थो वर्णनीयः कारणत्वादिसमानाधिकरणसत्त्वपर्यवसायी, तच्छ्रुत्वा भवदीयः स्वबोधवैलक्षण्यार्थमेव द्वयमेव समादधानो विषयं न भिनत्तीति मुख्यब्रह्मवाद एव सोऽस्मा-भिरनुमान्य( स्वीकार्य ) इति स्वाभिमतं निर्णायकप्रमाणमुपदर्शयन्ति [५३]निःश्वसितमित्यादि । जलशायिन इमे निःश्वासाः, तत्र कम्बुसदृशः कण्ठः, स्वपत एव सर्वप्रपञ्चसंरक्षणाय चतुर्दशस्थानानि चात्र प्रमाणानि आनन्दमयान्तानि ( लक्ष्मीप्रतिष्ठितानि ) दर्शितानि । श्रीरेव पुनरानन्दमयः, 'रस ह्येवाय'मिति रसा-भ्यासादिति पुष्टोऽर्थः । एतत्तत्त्वमानन्दमीमांसायां प्रपञ्चितमस्माभिः । वेदमूला प्रवृत्तिर्वैदिकी च सृष्टिः पदवा-क्यप्रमाणपारावारीणानां प्रमाणसिद्धा । तत्र वेदप्रामाण्यमुत्पत्तिविशिष्टं ज्ञापयितुमैकान्तिकमुत्पत्तिवाक्यमेव [illegible]-क्षोऽभिहितम् । एवं च श्रुतित्वेनैव समप्रामाण्यमिति ब्रह्मवादरहस्यं सोऽपि प्रासङ्गिको दर्शितः । वेदमात्रस्याख-ण्डार्थस्याभावादिति श्रीमदाचार्यप्रतिज्ञा चात्र सांसारिकसांयात्रिकाणां वेदपोतपात्रशरणानामवश्यं क्षेपणीत्वेना-लम्बनीया । कथं तर्हि श्रुतीनां बाध्यबाधकभावः पूर्वोत्तरमीमांसयोः, सत्यम्, यावद्भक्ताः किल प्रवाहपाठकाः, तावन्मात्रं ब्रह्म बुध्वा तत्र तत्र श्रुतीनां तात्पर्यं प्रतिव्यक्ति भिन्नं कल्पयन्ति, तथाप्यद्वैतरसं सर्वानुगतं न लभ-न्ते, तस्मात्सिद्धान्तपारदमनुसरन्तु, नान्यथा प्रवृत्तिनिवृत्तिमार्गयोर्नारक्षीरसागरयोः पारं गन्तारः । तयोः स्थ-मोऽयं महापुरुषैः कृतस्तं यो न जानीते तदवस्थामाहुः संप्रतीति । ज्ञानिनस्त्रेधा, ते सर्वे प्रकृतिपरवशा बहुवचनेन निर्दिष्टाः । 'ज्ञानी त्वात्मैव मे मत'मिति भगवत्सिद्धान्तः । तथा च ज्ञानमेव विषयान्तराभावे विषयो भूत्वा विषयतामवतीत्युक्तम् 'महात्मानस्तु मा'मिति । अधस्तनं सुदर्शनप्रकाश्यम् । सर्वेन भगवा-नेव मार्गप्रद इत्युक्तं भवति । प्रसङ्गस्मृतस्य भगवत उपेक्षानर्हत्वम् । अतिप्रसङ्गो मायायाः, तेनालं भगवतैव पूर्णानां प्रतिबिम्बप्रसङ्गात् । प्रसङ्गमुपसंहृत प्रतिबिम्बभ्रमान्धकूपेऽन्धतमसि सिद्धवत् पतनीयमिति सिंहावलोक-नेन स्मारयन्ति अपरं चेति । यदि चाविद्या न दोषः, तर्हि प्रतिबिम्बः सत्यः, यदि दोषो न सा ब्रह्मणीत्याहुः तथा चेति । 'निर्दोषं हि समं ब्रह्मे'ति स्मृतेरित्यर्थः । द्रष्टृभावे च प्रतिबिम्बे मानाभाव इति भावः । नियाम-कस्य बिम्बाभावे प्रतिबिम्बाभावात्प्रयोजकाभावप्रतियोगित्वम् । स्वाभाविकस्य चाप्रभवात्प्रतिबिम्बे प्रतिबि-म्बासम्भव इत्यर्थः । अथानुविधानमात्रं तन्मन्यन्ते बिम्बचेष्टां प्रति स्वानुविधानम्, न तावदीपाधिकत्वम्, तदपीदं अविद्ययैव तत्सम्पादितमध्यासपरम्परयेति यदि, तर्हि जीवस्य प्रतिबिम्बो जीव इति सोपहासमाहुः मन्दव्याख्यानमेतदलमिति । व्याख्यानं प्रतिबिम्बश्रुतीनाम् । प्रच्छन्नास्तिको निरीश्वरमीमांसकः । तथापि मते बिम्बरूपेश्वरासिद्धिरिति तात्पर्यपक्षेण व्याख्यम् । परमात्मैवान्धतमसि पातित इत्यभेदार्थकरूपकल-क्ष्मणं व्यञ्जयन्त इवाहुः परमात्मनस्तद्दर्शित्वेनेति । भवन्मते द्रष्टृत्वस्यौपाधिकत्वादितिभावः । स्यादे-तत्, प्रतिबिम्बदर्शी परमात्मनोऽन्यः कश्चिज्जीवोऽस्तु, स एवोपाधिदर्शी स्वान्तःकरणमुपनेष्यत् परमात्मानं साद-यित्वा द्रष्टा इत्यभिमतेन यावता स जीवन्मुक्तः, मुक्तो नु परमात्मन्येव प्रवेक्ष्यति, अत एव मुक्तोपसृप्याधिकर-णमिति बोधितमेवामुक्त्वा वादिनः प्रतिक्षिपन्ति जीवन्मुक्तीति । संन्यस्तुमपीति । जडो निष्क्रिय

स्यादित्यर्थः । यत्तु परदृष्ट्यैव तथेति, तत्र वक्ष्यामः । अत्रापरे प्रत्यवतिष्ठन्ते प्रारब्धमात्रशेषेति । 'ज्ञानाग्निः'
'नाभुक्त'मित्यनयोर्वाक्ययोर्विरोधपरिहाराय सञ्चितानामेव क्रियमाणप्रारब्धाभ्यां भिन्नानामेव ज्ञानविनाश्यत्वं,
प्रारब्धैरेव शरीरयात्रादिकमुपपद्यते । तथाहीति । अन्तःकरणं स्वच्छम्, अविद्या तु गुणत्रयवती तमआद्य-
वच्छेदेनांशतोऽस्वच्छेत्यन्तःकरणे प्रतिबिम्बवादः प्रवृत्तः । जीवाणुत्ववादिनां परैकदेशिनामन्तःकरणसम्बन्धा-
हन्तादिमत्त्वं संसारित्वं, न जीवन्मुक्तानाम्, तदुक्तं माध्वैः 'आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति । गच्छेच्च
हरिपादेन मुक्तस्यैषा स्थितिर्भवेदि'ति । कायवाङ्मनसां तदीयत्वमिति च सिद्धान्तः । न च ममाप्येवं सिद्धा-
न्तेन संसारित्वमिति शक्यम्, तत्सिद्धान्तानुसरणे भगवत्सम्बन्धिनामन्तःकरणादीनां निवृत्त्यभावे परममु-
क्त्यव्यवस्थादोषस्थापत्तेरित्यलं परपक्षप्रवेशेन । सुतरामिति । तत्र दोषान्तराणामपि पूर्वमुक्तत्वादिति भावः ।
अन्ये तु अप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्तकत्वाङ्गीकारेण शरीरादौ ऐहिकस्य स्वर्गप्रतिबन्धकत्वप्रारब्धप्रतिषद्ध
तत्त्वज्ञानं नाविद्यानिवर्तनद्वारा फलायालमित्याहुः । केचित्तु दग्धपटन्यायेनाविद्यात्मकप्रारब्धादिसत्त्वमुररी-
कुर्वन्ति । सर्वान् निराचिकीर्षवस्तदेव वदन्ति नैवं वाच्यमिति । 'शरीरयात्रापि च ते न प्रसिध्येदकर्मण'
इति भगवद्वाक्यविरोधादित्याशयः । अन्यथा प्रारब्धाधीना शरीरयात्रेति पार्थस्य समाधानसौकर्यात्तथा भग-
वता नोक्तं स्यात् । पार्थो हि परेषां तत्त्वज्ञानमास्थाय प्रायोपविष्टो जीवन्मुक्तमिवात्मानं मन्वानो न
किञ्चित्कर्तुमुत्सहते, तज्ज्ञानसंस्थां च भगवान्निरस्यति, नित्यमुक्तमिव नरमधिकुर्वन् तत्साधारणीं च
सप्रयोज्यां क्रियामुपदिशति । यथा स्यन्दनम्, तथा स्यन्दनाधिरूढस्य ते युद्धकर्मेति तत्त्वम् । अयमत्र
सद्भावः-प्रारब्धस्थितौ न विवदामहे, तन्मात्रशेषाऽविद्येत्यादिकं तु न मन्यामहे, अविद्यातद्विघातत्वाभ्यामेव
नाश्यनाशकभावात्, सर्वत्र शुक्त्यज्ञानादौ भवन्मते तथा सम्प्रतिपत्तेः, प्रारब्धान्यत्वेन भवद्भिर्ना-
श्यतावच्छेदके विशेषणे गौरवान्मानाभावाच्च । यदि फलमनुरुणत्सि, त्यज तर्हि प्रारब्धस्यैवाज्ञानान्त-
र्भावम्, सर्वसम्मतेरभावात् । यदि च यावन्ति ज्ञानानि तावन्त्यज्ञानानीति नानैव नाश्यनाशकभावे
प्रारब्धेतरस्थल एव तत्कल्प्यते, न तु प्रारब्धान्यत्वं निवेश्यत इति मन्यते, तर्हि प्रारब्धनाशेन सहैवाज्ञानना-
शोऽस्तु, प्रारब्धनाशस्यावश्यं कार्यत्वेन तत्कारणस्यैवाविद्यानाशकत्वोपपत्तेः, प्रारब्धस्याज्ञानकार्यत्वाभावप्रस-
ङ्गाच्च, तत्त्वज्ञाननाश्यत्वेनैवाविद्यात्वोपगमात्, तदुक्तं पुरस्तात् ज्ञानमप्यज्ञानस्यैवेति । ज्ञानप्रागभावस्यान्य-
ज्ञानत्वाभेदकारविरोधः । ज्ञानव्यतिरिक्तस्य सर्वस्याज्ञानत्वादेकविधनियमोपपत्तेर्न प्रागभावेनापि कृतार्थता । न हि
ज्ञानभिन्नमात्रं प्रागभाव इति । अपि च प्रारब्धस्य तन्नाशस्य च क्षणादिकं चरमतत्त्वज्ञानं वा परममुक्त्यव्यव-
हितपूर्वकालीनं नाशकम्, तस्यापि पुनस्तादृक्क्षणान्तरं चेत्यप्रमाणकल्पनायां ध्वंसधारादिकल्पनायां च गौरवा-
त्तत्त्वज्ञानाश्रयक्षणस्य दृश्याश्रयकालपूर्ववर्तित्वाभावनियमस्य प्रथमावे मानाभावात्तद्धर्मस्य तस्य दूषितत्वाच्च ।
किञ्च विद्याविषयत्वविशिष्टस्याविद्यासमयस्य च समकालीनत्वेऽपि चरमधीमतः क्षणस्याविद्यातत्प्रयुक्तदृश्यविनि-
ष्टकालपूर्वत्वाभावनियमो निष्प्रत्यूह एव । अभ्युपगतं हि बृहदारण्यकभाष्ये विद्याविद्यासमययोः समसमयव्य-
वधीभवनं रुद्राणां शङ्करेण । तस्माच्चरमधीमतः क्षणस्याविद्याविशिष्टकालीनत्वाभाव इति नियमान्तरमभ्युपगच्छ-
तामाधुनिकवेदान्तविदुषां तत्त्वावबोधविशिष्टक्षणस्य स्वकालीनत्वाभावनियम एवाश्चर्यपर्यवसन्न इति सरि-
मिरवधातम्यम् । तथा प्रकृतं ज्ञाननाश्यत्वं श्रूयमाणमपि तादृशस्य नाज्ञानत्वकल्पकम्, प्रारब्धादौ भागा-
सिद्धेः । तत्राज्ञानत्वप्रयोजकं किं नाम, नाश्यत्वमात्रमिति चेत्, न; प्रयोजकत्वात्, ज्ञानभिन्नस्वरूपाज्ञानत्वात्र-
च्छिन्नं प्रति ज्ञानभिन्नजन्यत्वमेव प्रयोजकम्, अनादित्वात् । तथा च प्रारब्धस्य ज्ञानभिन्नजन्यत्वेनाज्ञानत्वे मूल-
प्रकृताविसिद्धिः । तस्या. स्वत एवाज्ञानत्वमिति चेत्, ईश्वरेऽप्यहमज्ञ इति प्रत्ययस्वीकारापत्तेः । किञ्च तस्या-
ज्ञानत्वेन प्रज्ञान्तर्भावो वाऽज्ञानत्वं वा, अज्ञानत्वापेक्षया ज्ञानत्वस्य लघुत्वात् । तत्र भेदवादिनां मते धर्मरूपं
ज्ञानं सा, अभेदवादिनां ब्रह्मणः स्वरूपसम्बन्धविशेषः, तस्य च तादात्म्यत्वासद्व्यवच्छिन्ननियम्यानामपि पदा-
र्थानां न ज्ञानभिन्नत्वम्, ज्ञानधर्मप्रयोज्यत्वेनाज्ञानप्रयोज्यत्वाभावादिति मुद्गरमूर्धकाष्ठा गतोऽयं मायावादत-
मपि मतवादचन्द्रमा इत्याहुः ब्रह्मसाक्षात्कारैकेति । तत्साक्षात्करणलक्षणस्वरूपसम्बन्ध एव सर्वनियामक

अविद्यानाशे तज्जनने वा, सचाभिन्न एव सम्बन्ध इति यथाकार्यमुन्नेयोऽयम् । मीमांसका प्रकृतिरिल्वदृष्टमिति मायेति स्वरूपमिति बहुशो मन्यन्ते, तस्या द्वितीयदलरूपाया स्वरूपतादात्म्येन विद्यमानाया तदेकतोऽपि विरहात्मकाज्ञानेन स्थातुमशक्यत्वादित्यर्थ । अकारस्य भगवद्वाचकत्वेन निविष्टत्वान्न तु तत्पर्यायत्वयेति पदयाम इत्याशय । [६४]**प्रतिबन्धकाभावादि**ति । वेनेत्यनेनैको ग्रन्थ । अत्र प्रतिबन्धकस्य निवर्तकस्याभावे निवृत्त्य योगादिति द्वैतापत्तिरित्यर्थ । [६४]**भोगेके**ति । प्रारब्धमविद्याभिन्न ज्ञानानाश्यत्वे सति भोगनाश्यत्वात् । अत्र सत्यन्तेनैव सिद्धौ भोगेत्यादिविशेष्य नाशकान्तरदर्शकमिति सत्प्रतिपक्षमसदनुकूलम् । [६४]**किं वक्तुमुद्यतोऽसि** । तिष्ठ तर्ह्येवमेवेति सावष्टम्भम् । [६४]**अभ्यासाभावादि**ति । [६४]**सुषुप्तावि**ति अभ्यास एव सामर्थ्यं कार्यकारणता । अथवा 'प्रारब्धाभ्यासशून्यश्च प्राज्ञवज्जीवन्मुक्तिमान् । परदृष्ट्या श्वसन् गच्छन्नेव निश्चितरो यदि । मैवं परस्य दृष्ट्याऽसौ वर्तमान परैरिह । परस्यान्तर्न रूपोऽयं सुप्तोऽन्येव विराडि'ति । इतेऽपि प्रवचने चरमतत्त्वज्ञानस्यैव कारणत्वेन वैयर्थ्यादिति जीवन्मुक्त्यनुपपत्ति समुच्चित्य दूषणद्वयमभिहितम् । नन्वत्र 'तदधिगम उत्तरपूर्वाघयो' रित्यधिकरणविरोध इति चेत्, न, प्रारब्धसत्त्वेऽपि नास्मन्मते जीवन्मुक्तिविरोध, शुद्धसत्त्वस्वरूपश्रेयोविषयतान्यतरेणानुभूयमानानन्दवत्त्वमुभयसाधारणमुक्तित्वम् । तत्रार्वाचीनाऽपि जीवन्मुक्ति केषाञ्चिदेव, न सर्वसाधारणी । द्वितीया तद्विलक्षणा शुकादीनाम् । पश्चाल्लीलाविग्रहेणावतार इति । एतेन शुकादीना जीवन्मुक्तानामथवाद इति परास्तम् । परममुक्तस्यैव सनाथीकृत्य स्वकरे ग्रहणाच्छुकादीनाम् । एतेन स्वतन्त्रसत्ता अपि व्याख्याता । नित्यमुक्तस्य हि भगवत परिकरास्त इत्याहु [६५]**सेति** । सेति हासम् । [६६]**स्यादेतदि**ति । [६६]**चन्द्रादी**ति । तथा च वैज्ञानिकमवच्छेद्यत्व चन्द्रादावच्छेदकत्व चोपाधेरुभयत्र स्वरूपसम्बन्धविशेष । [६६]**छिन्नादी**ति । जीवनानात्वाभिप्रायेण । आभासत्व चेदमेव योऽयं वैज्ञानिकावच्छेद्यावच्छेदकभाव । तथा च ब्रह्मावच्छेद्याऽविद्या वा जीव इति विकल्पोऽपि ध्वन्यते, तदुच्यते [६६]**छिन्नादिसंख्यायोगी**ति । साक्षादेवाविद्याया सत्यायोगित्वात् । न चैवमविद्याया द्रव्यत्वापत्ति, इष्टापत्ते । [६६]**जीवपदवाच्यमि**ति । जीवप्राणधारण इति धात्वर्थानुशासने प्राणशब्दोपलक्षिताविद्याया एव सम्बन्धनिरूपकत्वाद्योगरूढ्या च तथात्वम्, 'जीवेशावाभासेन करोती'ति श्रुतेरिति भाव । विचारस्वरूपमाहु [६६]**न तावदि**ति । कस्य ब्रह्मण इति प्रश्नाथस्यैवार्थत उत्तरत्वे उत्तरयन्ति [६६]**न** ब्रह्मण इति । ब्रह्मणो मोहाभावोपदेशस्य चतु श्लोक्या प्रतिपन्नत्वात् । गोगवेणुविषाणादिरूपस्य ब्रह्मणोऽनेकत्वावभासमन्यथाप्रक्षिप्तलीलाया यथा नैतत्कल्पीयप्रामाणिकत्वम्, तथा क्वचिन्मानान्तरे प्रसिद्धतथाभावस्य जीवस्य न तथात्वप्रमाणपरिदृष्टवेदान्ताना सम्मतम् । ब्रह्मैव स्वाविद्यया संसरतीति पक्षस्य 'नित्यो नित्याना चेतनश्चेतनाना'मिति चैतन्यावधिभूतस्याविद्याविरोधित्वेन दूषितत्वात् । 'अभासेन करोती'त्यविद्याया एवावभास प्रति कर्तृत्वमाम्नम्, न ब्रह्मणो नापि जीवस्येत्याहु [६६]**अवभासविषयत्वादि**ति । अथ हेतुरविद्यायामपि तुल्य इति न तस्या अपि तथात्वम् । चैतन्यस्यैवाश्रयत्वविषयत्वाभ्यामविद्याया अविद्याश्रयत्वविषयत्वयो प्रतिक्षेपादित्यर्थ । अत्र दृष्टान्त [६६]**स्वानेके**ति । स्वमहत्त्वावच्छिन्नचन्द्रद्वैतम् । [६६]**चन्द्रस्य** नियतैकत्वावच्छिन्नस्य । सोऽयमीश्वरस्थानीय । [६०]**तेषा** द्विनेत्राणाम् । [६०]**तेषा** द्रष्टृभिन्नानाम् । [६०]**तस्य** नियतैकचन्द्रस्य । अस्तु तर्हि ब्रह्मण एवाविद्याश्रयत्वविषयत्वम्, मैवम्, कर्तृकर्मविरोधस्य भवदुक्तदूषणस्यानिस्तारात्, अत एवेद संक्षेपशारीरसम्मतेऽप्याहु [६०]**किञ्चे**ति । जीवात्मन परमात्मनियम्यत्व विहितनिषिद्धयो स्वाधीनप्रवृत्त्यादिक(म)त्वम्, अन्यथा वेदस्य नाम प्रवृत्त्याद्युपपत्तौ सर्वस्य सन्मार्गवर्तित्वापातात् । नाप्यदृष्टनियम, दुरदृष्टस्यैव तथा सत्त्वसम्भवात् । न चैव वैषम्यनैर्घृण्ये, तस्योपरिष्टाद्ग्रन्थ एव समाधेयत्वात्, तत्रैव विशदीकरणीयत्वात् । एव च प्रतिबिम्बवादेऽपि नियामकत्वानुपपत्तेस्तद्वेऽपि न पौनरुक्त्यम् । न चैवविध नियामकत्वमव्यवस्थितम्, चन्द्र प्रति व्यवस्थितत्व द्रष्टृ अथ नियामकत्वमात्रे दृष्टान्त तदस्यैव तत्त्वत एकोपाध्यवच्छेदात्प्रतिचन्द्रव्यवस्थोपपत्ते, इत्येव ब्रह्मणोऽप्यन्तर्यामिण प्रवृत्त्यधीन् प्रतीति चेत्तत्राहु [६०]**श्रुतिरि**ति । द्वितीया श्रुतिरित्यर्थ । यथेन्द्रपा गर्दभत्वश्रुतिरिष्ट'इत्यत्रेन्द्रगर्दभविधत्व शिष्टाचारमपि बाधिता द्वितीया श्रुतिर्गार्दभ गोपस्थानारम्भ तात्पर्य

कल्पयति, तथाऽऽत्मशब्दव्युत्पत्तिप्राप्तं व्यापकत्वमपोह्य 'आत्मान'मित्येव द्वितीया नियम्यत्वं नियमयति । न हि व्यापकस्य नियम्यत्वम्, अत एवोक्तं श्रुतिभिः 'तदविमुच्य नियन्तृ भवे'दिति । अविमोकश्च भगवदीयव्यापकत्वव्याप्तिः । तया सर्वशरीरगतचैतन्योपलम्भं काश्यादिस्थयोः सन्निधानं चादृष्टादिकमन्तरेणैवात्माऽऽत्मनि व्यापकाभेदपुरस्कारेण तिष्ठन्नियमयति संसारदशायां तस्याप्यन्तरोऽविज्ञातः । एवं व्यापकत्वश्रुतेरुपपत्तौ सिद्धायां तदणुत्ववादो नियम्यत्वपर्यवसायी स्वरूपतत आत्मनो व्यापकस्यानुभूयमानव्यापकधर्माणा जीवात्मनि स्वाभेदमहिम्नैव निर्वाहसम्भवात् ।

'गन्धवद्व्यतिरेकोऽयं ब्रह्मणः सर्वगस्य हि ।
जीवचैतन्यमित्येषा व्यवस्था पाञ्चरात्रिकी ॥
न व्यासश्रीमदाचार्यकुमाराणां च सम्मता ।
विश्वतोमुखसूत्रस्य व्यवस्थां वेत्ति वाक्पतिः ॥
गुणे गुण्यतिगामित्वं व्यवस्थाप्यापि यन्मतम् ।
व्यापकत्वश्रुतीनां हि भगवत्त्वेन योजनम् ॥
तन्मतान्तरभावेयं स्वस्य सिद्धान्तसिद्धये ।
नानाविधप्रकारा हि वादिनां भगवन्मताः' ॥

प्रकृतं प्रस्तूयते एवंविधं नियामकत्वमध्यासपरिनिष्ठं चेच्छुद्धेऽध्यासः स्वीकर्तव्यः, तर्हि स्वरूपतः शुद्धाविशेषाज्जीव एव नियामकत्वाध्यासोऽस्तु । तथा चैतत्प्रतिपादका'न्तरउपपत्ते'रित्यधिकरणभङ्गः । सर्वाधिकरणानां ब्रह्मण एव प्रतिपाद्यत्वेन प्रायः समन्वयदृढीकरणार्थत्वात्, अग्न्यादिदेवताऽन्तरत्ववज्जीवान्तरत्वस्याप्यधिकरणेन क्रोडीकरणात् । अथैवं जीवाभिन्ने तद्विलक्षणे च ब्रह्मण्यभेदवादे किं मानम्, आविर्भावस्तु रूपनिर्णय इति चेत्तत्राहुः अंशपरं चेति । ब्रह्मणस्तत्तभोपनीतसत्तादात्म्यानुगमनमेव । 'यथा विभूतयः सत्याः प्राकट्योत्कर्षतो मताः' । एवं सत्यस्यैकविधस्यैव वैलक्षण्यनिरूपके ब्रह्मप्रपञ्चे विषयतामात्रेण स्वरूपसम्मात्रेण चरणारविन्दमादधतो भगवतः सर्वोत्कर्षः श्रुतिभिर्वर्ण्यमानो लोकसिद्धं पुरस्कृत्यैव, अन्यथा धर्मिवद्धर्माणामपि मानान्तरासिद्धौ प्रतिपादनस्य विप्रतिपन्नत्वापत्तेः । अतोऽभियुक्तानां सूक्ष्मेक्षिकया भवितव्यमिति चकारचकोरार्थः । कः सम्बन्ध इति । आरम्भवादसांख्यव्युदासाय । अप्राप्तिपूर्विका प्राप्तिः संयोगः, न विद्या अविद्या सर्वहृताविरोधिगुणो ब्रह्मणस्तत्तन्मात्रताप्रतिपत्तिरिति सिद्धान्तः । तत्प्रसङ्गादिह ब्रह्मणो जगत्कारणतावच्छेदकं विचार्यते, तत्राज्ञानं भावरूपमिति मते तदध्यासस्यानवच्छेदकत्वमुपलक्षणत्वं वा । द्वितीये तस्यानवच्छेदकत्वभावत्वेन कारणतावच्छेदकत्वमनुपपन्नम्, जगत्कारणतावच्छेदकस्यैकस्यात्मज्ञानानिर्वर्तत्वाच्च, अन्यथा सर्वज्ञस्य जगत्करणे प्रवृत्तिर्न स्यात् । तथा च जगदपलापप्रसङ्गः पूर्वमुक्तो न विस्मर्तव्यः । स्वरूपसम्बन्धलक्षणायास्तु सम्भवत्यनवच्छेदकत्वम्, निरवच्छिन्नकारणत्वाभ्युपगमे(तु निरुपाधिकमेव कारणत्वमन्तत स्वरूपविषयत्वमेव काऽवच्छेदकम्)ऽपि लौकिके साधनसाधारणकारणतावच्छेदकं स्वरूपविषयत्वमेवेति सर्वानुपपत्ति सिद्धान्ते परिहृत्य परमते तामुद्घाटयन्ति नं तावदिति । तयोर्विभुत्वेनेति । न चाविद्याया द्रव्यत्वेन विभुत्वेऽपि न ब्रह्मणः, त्रिविधपरिच्छेदशून्यत्वस्य तन्मते विभुत्वपदार्थत्वादिति वाच्यम् । आविद्यकजालम्युपगमसिद्धान्तेनैतदभिधानात्, तदा ब्रह्मणोऽपि द्रव्यत्वाङ्गीकारात् । ननु तथाप्यविद्यासम्बन्धाभावे तदनुपपन्नम्, मेयम्, तदनङ्गीकारपदेन तस्यैव दूषितत्वात्, नित्यानादिसंयोगाङ्गीकाराच्च, संयोगस्य नियमेन जन्यत्वे मानाभावात् । अध्यास इति । तत्प्रयोजकरूपाभावेन तस्याप्यभावादित्यर्थः । अधिकारेणैतदर्थप्राप्ते । अत एवोभयाभावबोधनात्र पौनरुक्त्यम् । कथं पुनस्तत्प्रयोजकरूपाभाव इति चेत्, अत्राभिधीमहि सन् पुमान् सन् घटः पीतः प्रिय इत्यादिप्रत्ययाः किमध्यास संसर्गतयाऽवगाहन्ते, तन्नियामकं वा मूलाज्ञानाध्यासम् । द्वितीये कार्याध्यासे मानाभावः । आद्ये कारणाध्यासे मानाभावः । अथानवस्थापरिहारार्थं कारणाध्यास आवश्यकः ।

प्रातीतिकप्रातस्विकाध्यासस्तु सवज्ञाध्यास एव किञ्चिज्ज्ञाध्यासानुप्रवेशादुपपन्न । सत्सगत्वेन भानात्तु नाधुना
सानस्यमुज्जृम्भते । एव तर्हि सत्यानृतसमेदावभास कार्यकारणाध्याससाधारणसिद्धान्तलक्षणाकान्त । तथा च
कारणाध्यासोऽपि स्वरूपसम्बन्धमपेक्षते, न वा । आद्ये सम्बन्धानवस्थादौस्थ्यम्, द्वितीये त्वध्यस्त ब्रह्मति
भवन्मते लौकिकवैदिकप्रत्ययानुपपत्ति । ब्रह्मस्वरूप तत्र सम्बन्ध इति चेत्, तर्हि किमन्यत्र तन्निलायनमी
डामनुसरति । यत्तु स्वरूपसम्बन्धानङ्गीकारावसरे मधुसूदनै विकल्पितम्, तथाहि ज्ञानविषययोर्न स्वरूप सम्ब
न्ध , तद्विवेके स्वरूप सम्बन्धश्चेत्सर्य, सयोगादावतिव्याप्ते । न च तदुभयान्यत्वम्, हिमवद्विन्ध्ययोरपि स्वरू
पसम्बन्धापत्तेरिति । सत्यम् । तयोरपि हिमवद्विन्ध्याविसायेकज्ञानविषयत्वादिसम्बन्धसत्वात् । यथा वाऽमी
गोमौ गौतमभरद्वाजौ नारदपर्वतावित्यादि सह्यविन्ध्याविति च, तेन विशिष्टबुद्धेरपीष्टत्वात् । अन्यथा तु तदा
रोपाभावे तन्निमित्ताकल्पनात् । यदपि सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययजननयोग्यत्वमात्मन्यव्याप्तम्,
तन्नात्मान जानातीत्यादौ समवायस्यैव सम्बन्धान्तरस्य सत्वादिति । तदपि न । तत्र विशिष्टप्रतीतिजनन
योग्यतायामात्मनि ज्ञाननिरूपिताया स्वस्मिन् स्वनिरूपिताया च समवायस्यातन्त्रतया तदन्तरेणेत्यस्योपपत्ते ।
अतीन्द्रियाभावादावीश्वरज्ञानानुमित्यादिरूपप्रतीतियोग्यतयैव सामान्यतो विषयतोपपत्ते । सम्बन्धत्व च
ससर्गताविशेष प्रतीतिसाक्षिकोऽतिरिक्तपदार्थं प्रमेयत्वादिवत्स्वपरसाधारण इति नानवस्थाव्याघातौ । सम्ब ध
त्वेन च चाक्षुषत्व मूर्तत्वमूर्तत्वान्योन्याभावस्येव, अखण्डोपाधिनाऽभावत्वेन विषयत्वादिना चेत्यमियुक्तैरभ्युप
गमात् । अभावभ्रमस्थले तु वास्तवसम्बन्धसत्वे प्रमात्वस्याऽऽपाद्यत्वम्, तदापादने वास्तवसम्बन्धसत्वमित्य
न्योन्याश्रयसाम्यात्, फलानुरोधित्वात्कल्पनायास्तत्र स्वरूपस्य सम्बन्धत्वाकल्पनाच्च । न चैव सम्बन्धान्तरम
न्तरेणेत्यादि व्यर्थम्, तस्य सम्बन्धत्वकल्पनातात्पर्यकत्वात् । नन्वियं कल्पनाऽध्यारोपपर्याय एवेति चेत्, न,
विश्वव्यवस्थाया अनादिसिद्धदेशकालाद्युपवृंहितविषयतयैवोपपत्तेरित्यधिक विशिष्टेच्छाव्यवस्थायाम् । एतेन विष
यता नाध्यास इत्युक्त भवति । विषयतैव सर्वत्र सत्यत्वाशो नातद्वत्त्वांश इति प्रकाशे प्रामाण्यमेवाशेषतादात्म्य
समाहृतम् । एतेन विशिष्टस्य प्रत्यय इत्यत्र स्वरूपसम्ब धस्य पक्षधर्मत्वे आत्माश्रय । सम्बन्धमानस्य तत्त्वे समू
हालम्बनविषयभगत एव तत्तज्ज्ञानविषयत्वापत्ते समूहालम्बनविषयताया स्वरूपसम्बन्धात्मिकाया सत्वात् । एव
ज्ञानस्याभावो ज्ञातोऽभाव इत्यनयोर्विषयवैलक्षण्येनावैलक्षण्यप्रसङ्गादिति दूषणमप्युद्धृतम् । अतिरिक्तत्वेनाभ्युप
गतसम्बन्धत्वकल्पनाया स्वहस्तितत्वात् । न च प्रतीतौ सत्या सम्बन्धत्वकल्पना, तस्या सत्या प्रतीतिरिति
वाच्यम् । ससर्गज्ञाननियमेन प्रतीते सम्बन्धत्वकल्पनानपेक्षत्वात्, नित्यविषयतायाश्च ससर्गकल्पन न
प्रतीतिमपेक्षते । नापि द्वयबाधे तृतीयसम्बन्धकल्पनमिति ससृष्ट ब्रह्म, कथचित्ससृष्टस्वभावम्, उपलक्षणभिन्न
त्वात्, यदेवम् तदेवम् यथा विद्वद्विशेषणीभूतशमदमादिव्यक्ति , यन्नैवम्, तन्नैवम्, यथा माया । तेन मायि
कससर्गनिरास । अत एव साख्यादयस्तु परस्पतिरिक्त वैशिष्ट्य प्रकृतिपुरुषयोर्न मन्यन्ते, भेदख्यातिपर्यवसाना
ज्ञानद्वयवादिनामामनन्ति चोपलक्षणस्य प्रकारताम् । सिद्धान्तिनस्तु तामपि न मन्यन्ते, तद्वदस्मान । न चो
क्तानुमान प्रयोजकम्, उपलक्षणभिन्नस्य विशेषणस्य ससर्गिस्वभावताया प्रयोजकत्वात् । ब्रह्म च नोपलक्षणम्,
व्यावर्तकान्तरविशेषणविरहात्, असत्त्वविरहात्, प्रत्याप्यव्यावृत्त्यसमानाधिकरणत्वाच्च । तेनाणूनामिव तच्छक्ति
त्वेन ब्रह्मणो व्यावर्तकत्वेऽपि फलितद्वितीयहेतो सत्त्वान्नासिद्धि । अतद्व्यावृत्तिसमानाधिकरणस्योपलक्षणत्वात् ।
अन्यथा घटादेरप्यनियतोपलक्षणत्वप्रसङ्गात् । न च ब्रह्म न ससृष्टस्वभावम्, अविशेषणत्वादिति प्रतिरोध इति
वाच्यम्, घटादिषु व्यभिचारात् । विशेषणसामान्यभेदो हेतुरित्यपि न वाच्यम्, ब्रह्मविदि ब्रह्मणो ब्रह्मणि चो
भयत्र तादात्म्येन ब्रह्मणो विशेषणत्वात्, अनावृतानन्दैकरस्य विशेषणत्वाबाधाच्च, आवृतान दव्यावर्तकत्वात् ।
माया रामध्यङ्गीकारे स्वकार्येषु विशेषणीभवन्ती ब्रह्मणि न विशेषणमिति भवदभ्युपगमाच्च । वस्तुतस्तु मा
याया क्वचिदपि न विशेषणत्वम्, अननुगतस्वभावत्वात्, समष्टावपि चैतन्यानुप्रवेशात्, सत्ताया एवानुगत
त्वात्, स्वभिप्रनध्यासात् । एव प्रपञ्चेऽपीति रहस्यम् । कथ तर्हि घटे रूपमित्यादिर्वितता विशेषणविशेष्यभाव
इति चेत्, तद्वत्ताप्रतीतेर्विशिष्टबुद्धित्वे अनुबोध्यससर्गस्यानुगतस्यातिरिक्तस्य सिद्धान्तिभिर्ब्रह्मस्वरूपत्वाङ्गीकारात् ।
एतेनासंसर्गतया पूर्वसिद्धा धर्ममीमांसापि सासर्गिकविषयताविशेषपरतया व्याख्याता । तथा चोपलक्षणीय

प्रकारता प्रत्याख्याता । भ्रमायाः प्रतीतेरेकविधसंसर्गतागोचरत्वात् । अथ संसर्गतावच्छेदकतया व्याप्तिषु विशेषणतासिद्धिरवच्छेदकता विशेषत्वात्मविदुषां संसृष्टिः तस्या इति । किञ्चैवं शुक्त्यादौ रजतादिमत्त्वं ब्रह्मरूपं स्यात्, संसर्गप्रतीतेरिति, सत्यम्–अवच्छेदकतायाः अपि तद्वत्ताप्रत्ययगोचरत्वात् । रजतं तु यत्किञ्चिदस्तु, संसर्गो ब्रह्मैवाबाध्यमिति । यदप्याहुः तात्त्विकसम्बन्धव्यापकस्य देशकालविप्रकर्षाभावादेरनुपलब्ध्या बाधात्य-रिशेषादाध्यासिकसम्बन्धसिद्धिः । यद्यपि प्रतियोग्यनुयोगिभाववाच्यवाचकमानादीनां सम्बन्धत्वे तादृशव्यापका-भावादेरनुपलब्धिर्न बाधिका, तथापि तात्त्विकाध्यासाभ्यां भिन्नमेव तादृशं सम्बन्धं ह्येयत्वान्मिथ्याभूतमुररी-कुर्मः । तच्चातिरिक्तमनतिरिक्तं वेत्यस्यां काकदन्तपरीक्षायां न नो निर्बन्ध इति, तदेतत्सम्बन्धत्वासिद्धौ प्रति-योगित्वादीनां सम्बन्धत्वसाधकाभावेनासिद्धौ तन्तुकार्पासादयभावे तन्तुवायेन सह वादप्रवादमनुहरतीत्यलं प्रसङ्गेन । तस्मादनवस्थापरिहारो नाध्याससहस्रैः, किन्तु स्वरूपसम्बन्धेनैव । तदिदमुक्तम्–तस्याप्यभावा-दिति । अनवस्थयैवाविद्ययाऽनवस्था परिहरतो व्याघातः । अत एव दाम्नामनवस्थां परिहर्तुं यत्रैव दामनि स्थिति ... अनवस्थयैवाविद्ययाऽनवस्था परिहरतो व्याघातः । अत एव दाम्नामनवस्था परिहर्तुं यत्रैव दामनि

स्वरूपसम्बन्धमङ्गीकृतवान्, तत एवानवस्थामप्यनङ्गीकृतवानित्यावरणविद्यापरिहारिकेयं लीला पुंभावप्राप्तया मातुः समुद्दिश्य वत्सलं पितरं प्रति प्रेमोत्पादनम् । ततः स्तुतिश्चेत्यादिकमुपपद्यते । अत्र वादिनाऽऽशामोदक-मुपलब्धं स्वमतेन सत्यं पर्तुं प्रथमतस्तदाशा ग्राहयन्ति नापि स्वरूपेति । अविद्यास्वरूपेण प्रत्याया सम्बन्धस्य कार्यो, परन्तु ब्रह्मस्वरूप इत्यभिसन्धिः । प्रश्नेऽविद्याया अभ्यर्हितत्वेन पूर्वत्वात्, सन्मते परस्पराध्यासाङ्गी-कारेणाविद्यानिरूपितसम्बन्धस्यापि प्रक्रान्तत्वात् । अविद्यया करणीभूतया सम्बद्धो बद्धः, ब्रह्मणा स्वत आभि-मुख्येन सम्बन्धेन सम्बद्धो मुक्तः । प्रपञ्चोऽप्यस्मन्मते मुक्तियोग्यः, उपाधेश्चैतन्यस्य चाविशेषात् । यदि सार्व-भिकं तत्, तथापि शक्तिमपेक्षते । व्यवस्थितस्वरूपसम्बन्धवत्त्वप्रमा(ण)रूपं वस्तुतश्चैतन्यमिति । तस्माद्ब्रह्म-प्रयोज्यसम्बन्धेन संसारित्वापादकः, किन्त्वविद्याप्रयुक्त इति नियमः । अत एव आस्तां वेति । आत्मानियुक्त-पक्षः स्वसिद्धान्तो वेति पराभिमतानादर इत्यतस्तत्र दूषणमाहुः धौव्य इति । तच्चानवस्थापरिहारायेति शेषः । न चेष्टापत्तिः, कार्यत्व-व्यकेति । पूर्ववर्तित्वमनपेक्ष्य कारणत्वे सव्येतरविषाणयोरपि कार्यकारणभावापत्तिः । प्रागभावस्थल कारणत्वयोर्मिथो विरोधादिति भावः । योगक्षेमसाधारणीं कारणतामाशङ्कते ननु श्रुतीति । तत्राहुः "मैवमिति । एवेदं न भावस्थल इत्याहुः तन्निर्वाहायेति । अथ कोऽयं निर्बन्ध इति चेत्, तन्निर्वाहायेति । अथ कोऽयं निर्बन्ध इति चेत्, सादित्वानन्तत्वादिनियमोऽ-संचारमनेति । सृष्टिकालोत्पत्तिकत्वं मुक्तिकालीनध्वंसप्रतियोगित्वमित्यंशपरिहारेण सादित्वानन्तत्वादिनियमोऽ-विद्यादावित्यर्थः । पंथेति । देवमानेन शतायुर्मध्ये न मरणमित्यर्थः । मरणं चैहिकजन्मावच्छेदेन स्वसमानाधिक-रणस्वप्रागभावासमकालीनस्मृत्याद्यभाव एव । न च मनुष्यमानेन शतायुर्मध्ये मरणाभावे मनुष्योऽप्यमरः स्या-दिति वाच्यम् । देवेष्वविद्यायां च देवमानतत्त्वमानयोरेवामरत्वादिपदाभ्यामभिधानात् । 'विद्यां चाविद्यां चे'ति श्रुत्यनुसारेण 'भिद्यते'त्यादिवाक्यं व्याचक्षते तदिदञ्चेति । अत्र विद्याविद्ययोर्भेदाविरोधावश्यं वक्तव्यौ, सहभावश्रुते फलभेदश्रुतेश्च । तत्र भावरूपमज्ञानं नाभावरूपम्, व्याघातस्योक्तत्वात् । तस्य भावरूपता सिद्धा-न्तोऽपि । किन्तु सखण्डाखण्डविषयतारूपे भावत्वाभावत्वे । विद्याऽविद्ये सखण्डाखण्डत्वाभ्यां प्रकारतादिकेवल-विषयतात्वादिरूपे । न चावश्यकत्वात्केवलविषयतैवास्तु, विनिगमकाभावेनानुपस्थितसंसर्गतासिद्ध्यामिव महद्रा-घवात्, ततो विषयतामात्रसिद्धेरप्यनिवारणात् । एतेन ज्ञानाभावोऽभावमात्रं च व्याख्यातम् । तत्र तत्र प-विशेषो नक्ष्यते । यथा च नैयायिकरीत्या ज्ञानाभावे व्याघात उक्तस्तत्र नैयायिक प्रत्यवतिष्ठते–तमसोऽसिद्ध-त्वादृष्टान्तासिद्ध्याऽविद्यानुमानं तावदसिद्धम्, तमसोऽतिरिक्तत्वसाधनवैयर्थ्याद्वादिनः । न च व्याघातः, घटादि-ज्ञानाभाववानहमित्यज्ञानावगाह्यनुव्यवसायेन प्रतियोगितया ज्ञानभाक्षिणा प्रतियोगिज्ञानवति न स्यात्वमित्येवं हि सः । न ह्येवं समवायसम्बन्धावच्छिन्नज्ञानाभावज्ञाने प्रतियोगितया घटादिज्ञानस्याप्रतिबन्धकत्वात् । यदपि घटज्ञानज्ञाने घटज्ञानाभावाविरोधितावच्छेदकीभूतप्रतियोगितावच्छेदकं घटज्ञानत्वं न स्वीयप्रतियोगिनाव-च्छेदकतानियामकसमवायसम्बन्धावच्छिन्नप्रकारतासम्बन्धेनेत्युक्तम्, तत्र घटत्वसमवायपर्यन्तस्याविवक्षितत्वा-त्समवायेन घटज्ञानत्वं स्वीयसमवायावच्छिन्नप्रकारतानिरूपितविषयितासम्बन्धेनेति वैषम्यम् । यदि

मन्यते नैतदपि तस्य घटीयालौकिकविषयतानिरूपितज्ञानीयलौकिकविषयतानिरूपितसमवायावच्छिन्नविषयितया तज्ज्ञानज्ञानवृत्तित्ववद्घटीयालौकिकविषयतानिरूपकज्ञानज्ञाने घटज्ञाननिरूपितसमवायेनापि घटज्ञानत्वप्रकारध्रौव्यात्, विषयताद्वयसमावेशस्येष्टत्वात् । अतो नैयायिकाः कथमेवं व्याघातं व्याहन्येरन् । यच्च घटीयालौकिकविषयतानिरूपितज्ञानीयलौकिकविषयत्वावच्छिन्नमानसे तादृशविषयत्वावच्छिन्नस्य कार्यसमानतत्पूर्वकालान्यतरवृत्तित्वनियमाद्विरोधतादवस्थ्यमिति, तत्सत्यम्, तथापि घटीयलौकिकविषयतानिरूपितज्ञानीयलौकिकविषयतानिरूपितसमवायावच्छिन्नघटज्ञानत्ववत्त्वेनाविरोधात्, तस्य साक्षाद्घटज्ञान एव सत्त्वात्, तस्य सत्त्वेऽपि निरुक्तालौकिकविषयताघटितधर्मावच्छिन्नाभावस्य प्रसेद्धुं शक्यत्वादित्यास्तां तावत् । अत एव बाधनिर्णयोऽपि भिन्नप्रकारकत्वान्न बाधक इति । यत्पुनर्भावविशेष्यकप्रत्यय एकत्र ब्रूयामिति न्यायो न वेति तच्चिन्त्यम्, घटमहं न जानामीत्येव सार्वलौकिकत्वात्, मयि घटज्ञानमिति ज्ञानसत्त्वे तदसम्भवाच्च । उक्तरीत्या घटज्ञानानुव्यवसायाप्रसङ्गेन तत्तदुपधायकघटज्ञानमय्येऽधिकरणतावच्छेदकांशेऽपि विशिष्टवैशिष्ट्यबोधमर्यादातिशायिनोऽभावप्रत्ययस्याप्रामाणिकत्वाद् निर्धर्मितावच्छेदकाभावसुदेश्यालीकत्वात्, अधिकरणतावच्छेदकप्रकारताधिकरणोपस्थितेस्तत्र तन्त्रत्वात्, तादृशानुव्यवसायस्थलेऽज्ञानसिद्धिप्रसङ्गेनैकव्यूहमङ्गेऽपि व्यूहान्तरप्रत्यवस्थानेन वादिविजयप्रसङ्गाच्च । एवं प्रतियोगिसविषयकत्वं ज्ञानव्यावृत्तं दुर्वचम्, व्यावृत्तौ वा विनिगम इत्यपि बोध्यम् । संस्कारत्वेन च जन्यत्वं स्मृतिप्रागभावजन्यत्वं वा स्मृतित्वमापादयतीति तत्तद्व्यावृत्तप्रतियोगिसविषयकत्वेन हेतुतायामपि घटीयसविषयकाभाववानहमित्यनुव्यवसायानुपपत्तिर्दुर्वारैवेति ध्येयम् । अतीन्द्रियसाधारणज्ञानत्वावच्छिन्नाभावस्यातीन्द्रियत्वेन तज्ज्ञानप्रागभावस्यैव विषयत्वाच्च । किंचात्र इत्यादावधिष्ठानाविषयकतत्तज्ज्ञाने लक्षणा तु तज्ज्ञानस्याधिष्ठानाविषयत्वे स्यात्, ततो वरम् । न चैव विरोधिगुणे लक्षणेति । इदं तु बोध्यम्–प्रतियोगितदभावयोरिव ज्ञानाज्ञानयोर्विरोधोऽपि कथं समाधेयो भवद्भिः, कथं च ज्ञानाभावस्य ज्ञानसमयेऽविनिगम परिहरणीय, यत्किञ्चितदभावसत्त्वात् । कथमन्यथा प्रतियोगित्वोपपत्तिरपि । वस्तुतस्तु तत्रार्थोऽखण्डविषयत्वलक्षण वैकल्यम्, अन्यथा प्रतियोगिक्षणानवच्छिन्नतत्तदधिकरणीयविशेषणतायामभावसत्त्वर्थतायां तत्तत्क्षणावच्छिन्नत्वाभावस्यापि तादृशी विशेषणता सम्बन्ध इत्यनवस्थापत्ते । अतिरेके तु विषयतायास्तत्र तत्रैव सम्बन्धत्वं कल्प्यते । सा च नित्यज्ञप्तिस्वरूपा जन्यज्ञानेषु यथासम्भवं स्वीक्रियमाणसंसर्गताशालिनी तथैवाश्रयत्वविषयत्वभागिनीति भावरूपे एव ज्ञानाज्ञाने । अत एव 'विज्ञानं चाविज्ञानं चे'ति ब्रह्मवादिनामुद्घोष । अथ समुदायवृत्त्याऽज्ञानादिपदं भावरूपाज्ञानवाचकम्, रूढिर्योगमपहरतीति न्यायाच्च । रूढिग्राहकं च मायाप्रकृत्यादिपदं ब्रह्मपदमिव मन्मते परमात्मन इति चेत्, सत्यम्, तथाप्यवयववृत्त्यैवोपपत्ते । न हि वस्तुनोऽज्ञानं ज्ञानाभावो वाऽर्थ, घटो नेत्यत्र व्यभिचारात्, भावे वा मतभेदे घटाज्ञानमर्थं स्याम तु ज्ञानसामान्याभाव । एवं चावयवीयोपस्थितेरभावं प्रसिद्धमेवादाय सुलभतयाऽतुला कथं बलाबलविवेक । यदि च प्रकृतिप्रकरणिकी समुदायार्थोपस्थितिः शीघ्रतमा, यथा 'वरुण आदित्यं' रित्यादाविति विभाव्यते, तदा ब्रह्मप्रकरणं 'स्निग्धयाति' इत्यारभ्यैवेति वाच्यम् । उभयाकाङ्क्षाहरप्रकरणस्य पूर्वत्रोभयत्रापि च सत्त्वात् । वस्तुतस्तु कुमुदादिबोधव्यावर्तनाय पङ्कजादिपदे इव नियम आस्थीयते । प्रकृतेऽनुज्ञानभेदतदत्यन्ताभावप्रागभावादिबोधनेनातिप्रगल्भसंभावना येन रूढि स्वीकियेत । यत्तु अभावबोधासम्भवमद्बीजम्, तत्तु प्रागेव समाहितं व्याघातपरिहारे । किंच ज्ञानदशायां तदगादशायां वा [illegible] जानामीत्यनुपपत्तिरुद्भाव्यते, नाद्य, तदानीमज्ञानवादिनापि तत्प्रतीत्यनङ्गीकारात् । द्वितीये तु तुल्यं समाधानम्, व्योत्तरवर्तिज्ञानत्वावच्छिन्नप्रतियोगितासंसर्गावच्छिन्नाभावबोधप्रामाण्यात्, अन्यविशावच्छेदकावच्छिन्नप्रतियोगिताकत्वानुपपत्तेर्व्यवस्थितविशेषविषयत्वादिति संक्षेप । अविद्यादिनत्वस्वरूपसम्बन्धकत्वमायां बन्धो, विपाटनतत्कल्पनादौ गुण इत्युक्तं साधनेति । साधनाभ्यासोत्कविद्याऽनुष्ठिरित्यर्थ । अंग इति । उपासना परिनिष्ठामभिप्रेत्य । तैर्थाचेति । सम्बन्धनिरूपणभेदाभिन्नत्वभेदावबोधव्यवहारादौ गुरुरनभिलर्थ । एतयाऽपि स्निग्धादिरेकेन परिहृता, गुरु इव तदपसादर्शनादिति हृदयम् । हेतुकमनवादी-

नामिति । शुकश्च सनकादयश्चेति द्वन्द्वः । आद्योऽवतारिमुक्तोऽभ्यर्हित', अन्ये त्ववतारमुक्ताः । आदिना
सनन्दनसनत्कुमारौ । वामदेवस्तु न सर्वदा तथा, किन्तु सम्पन्नः । 'तद्धैतत्पश्यन्नि'ति सिद्धसाध्यसमभिव्याहारत्व-
ध्वकार्यकारणभावबलेन साधनसम्पत्त्यैव तस्य कृतार्थं( त्वानुशयात् )त्वसंप्रतिपत्ते । अयमेव हृद्या शिवः शुक
इति न श्रुतौ पृथगुक्तः । सर्वदैव भगवद्भावावेशेन परमात्मैव शुकः श्रौत इति तु पारमहंस्यम् । अनुशयस्तु
द्वादशपदेन पूर्वमुद्घाटितः । तथाहि—श्रीभागवतस्कन्धप्रतिपाद्यास्तावच्छक्तयो मनीषिभिर्मननेनोद्धर्तव्याः । तत्र
'श्रियो वपुर्दधदि'ति फलप्रकरणार्थत्वात्पूर्वमुक्तिः सर्वोपास्यत्वाय । 'नोऽनुग्रहं व्यधा' दिति पुष्टिः । उभयोः
कण्ठरवेणोपादानमन्योपलक्षणम् । एकैकया निषेवितमिति द्वादशवाक्यार्थाः । 'विद्यां चाविद्यां चे'ति चकार-
द्वयपुटितवाक्यार्थषाड्गुण्यद्वैगुण्येन भगवत्येकधैव साहित्येन समन्वीयन्ते, साहित्यं भगवद्भावः, 'उभयं सहे'-
त्युक्ते. । भगवद्भावस्तु भगवतो द्वादशात्मत्वप्रकटीकरणम्, तच्छुक एव चेति । स च शुचः शोकस्य पारं गतः ।
शुच. शोकस्य शुद्धसत्त्वभावोऽकारस्तदात्मा हि सः । शुक् च अश्चेति व्युत्पत्तेः । ककारणकाराभ्यां रूपद्वयं रामा-
साभावश्चेति बोध्यम् । तथा च विद्याऽविद्ययोः प्रकारान्तरेण सद्भावासंभवात्केनापि रूपेण भगवद्भावावश्यम्भा-
वात् 'सोकामयते'तीच्छात्मकभगवद्भावस्य स्वतन्त्रत्वात्केचिदित्यभुक्ता आत्मान इति स्थितम् । 'सोऽकामयते'-
तीच्छया लौकिकालौकिकप्रपञ्चगोचरत्वादिति प्रस्तुतोऽर्थः । प्रसङ्गागतं 'एष एवे'त्यादिकमुपरिष्टादुपपादयि-
ष्यते । अग्रेवक्ष्याम इति । 'श्रुतितस्तत्त्वसूत्रेश्चे'ति कारिकायामित्यर्थः । तथा च योगक्षेमसाधारणकारणता-
स्वीकारे तुल्यन्यायतया ब्रह्मापेक्षयाऽविद्याया एव तादृशकार्यतापत्तेर्भवन्मताऽर्थान्तरम्, अस्मन्मते भवन्मतसा-
धनान्तरीयके सिद्धिरिति निगूढभावार्थः पूर्वग्रन्थस्य । नन्वेवमविद्यानिष्ठकारणत्वप्रमापकप्रमाणानुपपत्तिरिति चेत्
तत्राहुः अस्या न निर्वहतीति । अयमाशयः 'अस्या बन्धनैकस्वभावाया' इति अनुपदवक्तव्यपरामर्शात्तादृक्-
स्वभावत्वं बद्धस्वभावसमनियतमित्यस्या अपि बन्धस्वरूपत्वेन कार्यत्वावश्यंभावात्तत्करणीभूताविद्ययेति पदं ब्रह्म-
समर्पकमेव कारणत्वस्य ब्रह्मैकनिष्ठत्वं गमयति । न हि भवन्मतेऽप्यचेतनस्य कर्तृत्वं, किन्तूपहितस्य । तथा चो-
भयथाऽपि मते विशेष्यतया ब्रह्मण एव कारणत्वं 'चक्षुषश्चक्षु'रितिवदविद्यागतकरणतानिर्वाहकमित्युक्तम् ।
न निर्वहतीति । सूरिभिर्मनीषितव्यम् । विद्वन्मण्डनपदे मयैव व्याख्यातुलसिकापत्रमर्पितमिति निपुणैर्विभा-
वनीयम् । जीवस्वरूपं तु तदानीं विद्यमानब्रह्मस्वरूपस्य सहस्रसम्वत्सरपरिमितकालादनाविर्भूतत्वेन प्रथमतो
स्फुषारणे प्रतीतस्थूलभावेंऽशत्वेनैव व्यपदेशो, न ब्रह्मत्वेन, नापि जीवत्वेन तदुक्तम्, स्वैरूपमिति । जीवत्वं
प्राणशब्दोपलक्षिताऽविद्यापदार्थसम्बन्धनिबन्धनं प्रागुक्तम् । परिपूर्णस्वरूपतिरोभाव स्वमुक्त इति तत्त्वम् ।
स्फुरणार्थं पुनरप्याहु. जीवभावमिति । स्वमतेन तु 'तदभिध्याना'दिवतिन्यायेनाविर्भावविशेषो जीवभावः । नैता-
वता सर्वज्ञतावैशिष्ट्यमपनीयते, तत्रैव किञ्चिज्ज्ञतामात्रप्रतीतो जीवभाव , मात्रत्वं ब्रह्माभिध्यानप्रयुक्तम्, अभि-
ध्यानं तु स्वरूपसम्बन्धविशेषो ब्रह्मनिरूपितो, न त्वविद्यानिरूपित. । ब्रह्म हि स्वसम्बन्धमनन्त करणादौ कल्प-
नानाशो भवति, प्राज्ञ इव सुषुप्तौ । इयमेव प्रथमावस्था जीवस्य सुषुप्तावनुवर्तते । ब्रह्मणि पुनरविद्या स्वसम्बन्ध-
ध्यासात्मकं कल्पयन्ती पूर्वोक्तकार्यकारणाध्यासविकल्पप्रसञ्जितानवस्थामसहमाना स्वरूपादये सम्बन्धमासा-
दयेयदि, तर्हि ब्रह्मवासादितं तया, कालियेनेव भगवानिति परमात्मोपप्लव· सर्वश्रुतीनां दर्शितः । परमात्मना
तु स्वसम्बन्धबलेन सर्वज्ञेनाविद्यामधिष्ठायाधोक्षजेनाप्यक्षीभवितव्यं श्रुतिकुमारीणामिति ध्वनिः । ध्वंसध्वंसः
सर्वेन भवतेष्यते, न तु सर्वत्रान्योन्याभावस्य । तथा च व्यावहारिकान्योन्याभावत्वावच्छेदेन हूतस्य पारमार्थि-
कत्वस्य न प्रमाणमित्याहुः भेदं वदन्निति । नन्वपारमार्थिकोऽपि भेदो द्रष्टव्य इत्याद्युक्ते यैत इत्यादि,
त्वैक्षणापीत्यन्तम् । वोच्य इति । विरुद्धगुणवत्त्वादेरविषयत्वे सिद्धेऽवास्तवभेदस्य कर्मैक्य(व्यक्तता)वादिना
मीमांसकानामपि सम्मतेर्लोपवानुगृहीताद्वैतश्रुतेः प्राबल्य ( ध्रौव्ये ) भ्रान्ते, भेदश्रुतेरन्ययानयनमौचित्यवर्जित-
मिति भाव । तैरद्याश्चेति । परमेतदभिप्रायेण, न तु नैयायिकादीनाम्, प्रतिबिम्बितरूपान्तरम्य तैरनङ्गी-
कारात् । तादृशोऽनिर्वचनीयः । अत एव बिम्बप्रतिबिम्बभावोपलक्षितगुरुचन्द्र एव दृष्टविषयो मनुष्या-
त्मर्यविदो वा, अत एवेत्यर्थः । मैंढापाय्ये प्रविद्दे । ननु 'यत्साक्षादपरोक्षात्' 'अयमात्मा' 'सत्यं विज्ञान'

